## अ अ इति ॥ ६८ ॥

एकोऽत्र विवृतः, अपर संवृत, तत्र विवृतस्य संवृतः क्रियते। अकारो विवृत. संवृतो भवति। वृक्ष। प्लक्षः।

इह शास्त्रे कार्यार्थ मकारो विवृतः प्रतिज्ञात, तस्य तथाभूतस्यैव प्रयोगो मा भूदिति संवृतप्रत्यापत्तिरिय क्रियते।

पदमञ्जरी

च वीरपुरुषाणि च भवन्ति आयुष्मत्पुरुषाणि च। इह चादौ वृद्धिशब्दः, मध्ये शिवशब्दः—'शिवशमरिष्टस्य करे' इति, अन्ते चायमुदयशब्दः॥

*अ अ* ॥ एकोऽत्र विवृतः, परः संवृतः, द्वावप्यनिभक्तिकौ, यो विवृतस्स स्थानी, यः संवृतः स आदेश.।

किमर्थमकारस्याकारो विधीयते? इत्याह—*इहेति*। *कार्यार्थमिति*। तत्पुनः कार्यमकारस्य दीर्घप्लुताभ्यां सवर्णसज्ञा, अन्यथा प्रयत्नभेदान्न स्यात्, ततश्च ह्रस्वोऽकारो गृह्यमाणो दीर्घप्लुतौ न गृह्णीयात्। तत्र दोषः—'अकः सवर्णे दीर्घ.', इहैव स्याद्—ऐन्द्राग्नमिति, इह न स्यात्—दण्डाढकमिति। तस्मादेवमादिकार्यार्थमकार इह शास्त्रे विवृतः प्रतिज्ञायते, तत्र यदीयं प्रत्यापत्तिर्न क्रियेत, तदा तस्य तथाभूतस्यैव प्रयोगः स्यात्, स मा भूदिति प्रत्यापत्तिरिह क्रियते।

न्यास.

ग्रहण नेष्यते, संवृतेन तु मात्रिकस्य सर्वगुणयुक्तस्याकारस्य ग्रहणमिष्यते' इति तदुपपन्न भवति। मङ्गलपूर्वकेषु हि कार्येष्वारभ्यमाणेष्वपीष्टार्थसिद्धिर्भवति। उदयशब्दश्चाय लोके वृद्धिशब्दवन्मङ्गलार्थत्वेन प्रसिद्धः। तस्मात् तस्य ग्रहण मङ्गलार्थं क्रियते॥

अ अ इति॥ एकोऽत्र विवृतः, अपरः संवृतः। तेन स्थान्यादेशयोरुभयो रूपाभेदादपि प्रयत्नभेदाद् भेदो भवति। अत्यन्ताभेदे सत्यकारस्य त्वकारवचनमनर्थकं स्यात्। अत्र यो विवृतः स स्थानी, यः संवृतः स आदेशः। अकारो विवृत., स संवृतो भवति। विवृतप्रयत्नोऽकारः संवृतप्रयत्नो भवति। संवृतप्रयत्नमादेशमनुभवतीत्यर्थः। वृक्षः, प्लक्ष इति। संवृतप्रयत्नविषयोपदर्शनार्थम्। ननु च विवृतोऽकारो नास्त्येव लोके वेदे च, संवृतस्यैव प्रयोगदर्शनात्, तदपार्थकमिदम्? इत्याह—इहेत्यादि। यद्यपि लोके वेदे च संवृत एवाकारः, तथापीह व्याकरणे कस्यचित् कार्यस्य सिद्धये विवृतोऽप्यभ्युपगतः। किं पुनस्तत् कार्यम्? अकारस्य चान्योऽन्यापेक्षया सावर्ण्यम्। एतदुक्त भवति—ह्रस्वदीर्घाकारौ सवर्णौ यथा स्यातामित्येवमर्थमकारो विवृतगुणः प्रतिज्ञात इति; अन्यथा यदि संवृतविवृतप्रयत्नौ परस्पर सवर्णौ न स्याताम्, ततश्चाकारो गृह्यमाण आकार न गृह्णीयात्। एवं च सति दण्डाग्रमित्यादावेव 'अकः सवर्णे दीर्घ.' इति दीर्घत्व स्यात्, दण्डाढकमित्यादौ तु न स्यात्। 'अभेदका इह शास्त्रे गुणाः' इत्युक्तम्, ततोऽयमदोष

दीर्घप्लुतयोश्चानेन विवृतेनाकारेण ग्रहण नेष्यते । तेन तयो सवृतो न भवति ।

सवृतेन च सर्वगुणस्य मात्रिकस्य ग्रहणमिष्यते । तेन सर्वगुण प्रत्यापद्यते ॥

पदमञ्जरी

इह स्थान्यकारो विवृतोऽण्त्वात् सवर्णाना ग्राहक इति दीर्घप्लुतयोरपि स्थाने सवृतोऽकार प्राप्नोति, आदेशस्त्वकार सवृतोऽण् न भवतीति सवर्णाना ग्राहको न प्राप्नोति, भाव्यमानत्वात्, ततश्च यद्गुण सवृत उच्चारित, तद्गुण एवाष्टादशभेदभिन्नस्यापि अवर्णस्य प्राप्नोति ? इत्याशङ्क्याह—दीर्घप्लुतयोश्चेति । इष्टिरेवेयम् । यद्वा—तपरनिर्देशात्सिद्धम्, 'अत्' इति सूत्र कर्तव्यम्, तत्र त परो यस्मादिति पूर्वोऽकारस्तपर, तात्परस्तपर इति द्वितीय, ततश्च स्थान्यकारो दीर्घप्लुतौ न ग्रहीष्यति, आदेशस्त्वनणपि गुणान्तरयुक्तांस्तत्कालान् ग्रहीष्यति । एकशेषनिर्देशो वाय द्रष्टव्य । अत्र षड् मात्रिका अकारा स्थानिनो निर्दिश्यन्ते, आदेशा अपि षडेव, तत उभयत्रैकशेष , तत्र षण्णा स्थानिना निर्देश-

न्यास

इति चेत् ? न, सवर्णसज्ञासूत्रे प्रयत्नभेदस्याप्याश्रितत्वात्, अन्यथा तत्र प्रयत्नग्रहण मनर्थक स्यात् । यदि तर्हि विवृत प्रतिज्ञातस्तत किमर्थं तस्येह प्रत्यापत्ति क्रियते ? इत्याह—तस्येत्यादि । तथाभूतस्येति । विवृतप्रयत्नभूतस्येत्यर्थ । प्रत्यापत्ति पुन तस्य सवृतगुणस्याकारस्य स्वरूपात् प्रच्युतस्य पुन स्वरूपस्य प्रतिलम्भ, मृतस्य प्रत्युज्जीवनवत् ।

इहानेन विवृतेनाकारेण गृह्यमाणेनाण्त्वात् सकलमवर्णकुलमुदात्तादिभेदभिन्नमष्टादशप्रकार गृहीतम्, ततश्च यथा गुणान्तरयुक्तस्य ह्रस्वस्य सवृतो ह्रस्व आदेशो भवति, एवं दीर्घप्लुतयोरपि स्यात् । किञ्चादेशोऽयमकार सवृत उपात्त, सवृतस्य चाकारस्याण्त्व नास्ति, प्रत्याहारेऽसन्निवेशात्, ततश्च यथाण्त्वाभावाद् दीर्घप्लुतौ न गृह्णाति, तथा सवृतमपि मात्रिक गुणान्तरयुक्त न गृह्णीयात् एवञ्च सति यद्गुण उच्चारितस्तद्गुणयुक्तस्यैव प्रत्यापत्ति स्यात्, न गुणान्तरयुक्तस्य ? इत्याह—दीर्घप्लुतयोश्चेत्यादि । कथ पुनर्दीर्घप्लुतयोरनेन विवृतेनाकारेण ग्रहणमिष्यमाणमपि न भवति ? कथ च सवृतेन सर्वगुणयुक्तस्य मात्रिकस्य ग्रहणमिष्यमाणमपि लभ्यते ? पूर्वसूत्र उदयग्रहणादिति पूर्वमेव कारणमुक्तमत्रास्माभिरुदयग्रहणस्य प्रयोजन वर्णयद्भि ।

तपरकरणनिर्देशमन्ये त्वाहु । अत् अ इति तपरनिर्देश कर्तव्य । तथा च भाष्य उक्तम्—'सिद्ध तु तपरनिर्देशात्' इति । तत्र प्रथमोऽकार त परो यस्मादिति तपर, द्वितीयस्तु तादपि परस्तपर इति । तस्य विवृतस्य तपरत्व दीर्घप्लुतनिवृत्त्यर्थम्, सवृतस्य सर्वगुणयुक्तस्य मात्रिकस्य च ग्रहणार्थमिति ।

इष्ट्युपसङ्ख्यानवती शुद्धगणा विवृतगूढसूत्रार्था ।
व्युत्पन्नरूपसिद्धिर्वृत्तिरियं काशिका नाम ॥

इति श्रीवामनाचार्यकृतायां काशिकावृत्तौ
अष्टमाध्यायस्य तुरीयः पादः

पदमञ्जरी

सामर्थ्यात् स्थानिभिर्दीर्घप्लुतौ भिन्नकालौ न गृह्येते। तत्र षण्णां स्थानिनां स्थाने षडादेशाः संवृता यथासङ्ख्यं भवन्तीति सर्वेष्टसिद्धिरिति शम् ॥

इति श्रीभट्टहरदत्तमिश्रविरचितायां पदमञ्जर्या-
मष्टमस्याध्यायस्य चतुर्थः पादः

न्यासः

इष्ट्युपसङ्ख्यानवतीत्यादिश्लोकः पूर्वमेव व्याख्यातः ॥

इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां
काशिकाविवरणपञ्जिकायामष्टमाध्यायस्य
चतुर्थः पादः समाप्तः

❀ ❀ ❀

समाप्तश्चाष्टमोऽध्यायः

❀ ❀ ❀

इयं व्याख्याद्वयोपेता स्वामि शुक्लैः परिष्कृता ।
काशिका वृत्तिमूर्धन्या मङ्गल्या पूर्णतामगात् ॥

### काशिकाप्रशस्ति

विद्वद्वर—जयादित्य-वामनार्यकृता सती ।
अष्टाध्याय्या इव व्याख्या शाब्दिकैर्बहुशः स्तुता ॥
भाष्येष्टि वार्त्तिकैर्युक्ता गणपाठोपबृंहिता ।
सूत्राणां च विशिष्टार्थैः काशिकेयं विराजते ॥
पाणिन्यष्टकमालम्ब्य मृग्यते तत्त्वकाङ्क्षिभिः ।
यत्सामान्यं विशिष्टं वा सर्वं तत्काशिकाम्बुधौ ॥
निर्मथ्येमं महाम्भोधिं दृष्टा तन्त्रार्थयोर्मतिः ।
'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' ॥

### पदमञ्जरीप्रशस्ति

भाष्यालवाले सवृद्धं सेचितं हरि-कैयटैः ।
पाणिनेरष्टकमिदं सहकारोपमायितम् ॥
श्रीहरदत्तमिश्रेण दाक्षिणात्येन धीमता ।
तस्य व्याख्यानभूतेयं काशिकामुपजीव्य हि ॥
शास्त्रार्थसौरभव्युष्टा रचिता पदमञ्जरी ।
मिश्रो मिश्रोपमः शाब्दे शास्त्र इत्यार्ययोर्मतिः ॥
'भाष्यं चाविकलं येन जिनेन्द्रो हरि कैयटौ ।
स्वकीयपदमञ्जर्यामुद्धृतं हि पदे पदे' ॥

### न्यासप्रशस्ति

प्रसन्नपदगम्भीरः प्रसन्नमनसा मुदे ।
न्यासो न्यास इवाभाति देवर्षौ ब्रह्मणो यथा ॥
ईषदूनो बोधिसत्त्वोऽग्रणीः शब्दविदामयम् ।
जिनेन्द्रबुद्धिर्निष्ठावान् शास्त्रे व्याकरणे परम् ॥
इक्षोर्व्याकरणात्सारं निष्कृष्य मधुरं रसम् ।
प्रादाच्छब्दविदां लोके श्रेयसे ननु भूयसे ॥
त्रिमुनि व्याकरणं शास्त्रं सम्यक्त्वेनावगाहितम् ।
हरि-कैयटयोः पश्चात् जिनेन्द्रेणैव केवलम् ॥
जिनेन्द्रस्य कृपालेशैरनुप्राणन्ति शाब्दिकाः ।
अद्यापि, जलजश्रेणिं प्रभाकरप्रभालवैः ॥

## सम्पादकद्वयसंस्तुतिः

*रामचन्द्रो* गुरुर्यस्य *जयरामः* पिता बुधः ।
*सरस्वती* च जननी ग्रामः *सरकरी* श्रुतः ॥
सिद्धपीठं हरिवनप्रान्ते रोहतकमण्डले ।
कलानौरे मुनेर्दादो राजते दादुमन्दिरम् ॥
तत्रस्थैश्च महद्भिस्तु दीक्षया साधु दीक्षितः ।
*स्वामी श्रीद्वारिकादासः शास्त्री* शास्त्रविचक्षणः ॥
भाद्रमासे सिते पक्षे चतुर्दश्यां रवौ दिने ।
वेद-युग्म-नभो-युग्मे शुभे वैक्रमवत्सरे ॥
इमां व्याख्याद्वयोपेतां *काशिकां* स्वमनोमुदे ।
गुरुकृपालवेनेव पर्यष्कार्षीद्यथामति ॥

❀ : ❀ : ❀

गुरुः *सभापतिर्यस्य*, जनिता *चन्द्रशेखरः* ।
जननी *मङ्गला*, ग्रामो *मठियाशुक्लनामकः* ॥
भारतस्योत्तरे प्रान्ते देव*रियाख्यमण्डलम्* ।
सोऽयं सरयुपारीणः शुक्लः शुक्लमतिस्तुतः ॥
शिष्यप्रशिष्यसम्पन्नो विद्याविनयवारिधिः ।
लब्ध*वाराणसी*वास इन्दिराया अनुग्रहात् ॥
शब्दशास्त्रादिनिष्णातः कालिकायाः प्रसादतः ।
अथाप्यभिधया *कालिकाप्रसाद* इतीरितः ॥
इमां व्याख्याद्वयोपेतां *काशिका*मात्मतुष्टये ।
शब्दविद्यागुरोः प्रीत्यै समस्कार्षीद्विधानतः ॥

❀:❀:❀

❀ शुभं भवतु सर्वेषाम् ❀